दूरध्वनिः – "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आं. प्र.) भारतम्.

संपुटः १२ | 15 th MAY 1974 | क्रमांकः ५

कालिदासकविताप्रसङ्गः

**श्री एस्. रामस्वामीशास्त्री अध्यक्षः,**
**श्री दिवाकर्ल वेङ्कटावधानी शाकुन्तलं प्रति भाषते ।**

आनन्द-
वैशाखांकः

शकाब्दा १८९६

मूल्यम
०—४० पैसाः

# विषयसूची

# दैवी वाक्

हरिः ओं अग्नि मीळे पुरोहितं यज्ञस्य देव मृत्विजं ।

होतारं रत्न धातमं ।

अर्थः– यज्ञस्य पुरोहितं = यथा राज्ञः पुरोहितः तदभीष्टं सम्पादयति तथाऽग्निरपि यज्ञस्य अपेक्षितं होमं संपादयति; तादृशं देवं = दानादिगुणयुक्तं, होतारं ऋत्विजं = देवानां यज्ञेषु होतृनामकः ऋत्विक् अग्निरेव "अग्नि र्वै देवानां होता" इति श्रुतेः । रत्नधातमं = यागफलरूपाणां रत्नानां अतिशयेन धारयितारं पोषयितारं वा अग्नि ईळे = स्तौमि (अहं होतेति शेषः) ।

ज्योतिः ओम्

## प्रजासौकर्यम् प्राधान्येन द्रष्टव्यम्

अस्माकं देशः भारतदेशः। अस्मिन् भारतदेशे प्रवर्तमानं प्रभुत्वम् प्रजाप्रभुत्वम्। प्रजाप्रभुत्वं नाम प्रजाभिः प्रजाभ्यः प्रजासौकर्यार्थम् प्रचाल्यमानं प्रभुत्वमेव भवति। तथासति प्रजाः परस्परविरुद्धभावयुक्ताः स्वार्थपराः भवेयुर्यदि तदा प्रजाप्रभुत्वम् केवलं नाममात्रावशिष्टमेव भवेत् किं च प्रजासु सौहार्दं सौजन्यं विनश्य जनाः परस्परपीडनपराः भवेयुः। तदा देशस्य अरिष्टमेव संजायेत प्रजाक्षेमश्च नष्टो भवेत्। अस्मद्देशे कृषिकाः कार्मिकाः वणिजः प्रभुत्वकार्मिकाः प्रभुत्वोद्योगिनः पालकाः सर्वेऽपि प्रजा एव खलु। एवं विद्यमाने सति प्रजाः विद्युक्तधर्मान् परित्यज्य स्वार्थपराः भवेयुश्चेत् महान् विपत्तिः देशस्य संभवेत्। कृषिकाः कृषिं विहाय अलसाः भवेयुः यदि आहारधान्यस्य लोपो भवेत्। समग्राहाराभावे प्रजाः क्षुधिताः अकार्याणि कुर्युः। कार्मिकाः स्वार्थपराः स्वकर्म सम्यक् न कुर्युः यदि देशे उत्पत्तिः नश्यति तदा मुख्याभिलषितवस्तूनां अलाभेन देशे कल्लोलः संजायते। उत्पन्नवस्तूनां इतरत्र प्रेषणाय आवश्यकवस्तूनां अन्यप्रदेशेभ्यः आनयनाय च यानसौकर्यं प्रजानामत्यंतावश्यकं भवेत्। यानसौकर्यं विना अद्य नागरिकप्रपंचे न किमपि कार्यं प्रचलति। तथासति अधुना भारत-

देशे धूमशकटकार्मिककार्यस्तंभनं वर्तते । एतेन कारणेन अन्यप्रदेशान् प्रतिगन्तुं वस्तूनां प्रेषणाय च प्रजानां महान् अन्तरायो वर्तते। एवं धूमशकटकार्मिककार्यस्तम्भनं अनुवृत्तं चेत् अनुवर्तितं च भवति देशस्य महान् नष्टः प्रजानां विपत्तिश्च भवेत् । अधुना धूमशकटकार्मिकाः वेतनाधिक्याय विवादं कुर्वन्ति कार्यस्तम्भनं च कुर्वन्ति। अस्मिन्काले रूप्यकमूल्यह्रासेन् वेतनं पर्याप्तं न भवति तत्सत्यमेव। देशे अन्यप्रभुत्वशाखासु च उद्योगिनः वर्तन्ते । तेषां वेतनापेक्षया धूमशकटकार्मिकानां वेतनं अधिकमेव भवति । तेषां परिस्थितिः कीदृशी भवतीति विचार्यमाणे अवश्यं तेषां स्थितिः विचारणीयैव भवति । तस्मात् सर्वेषामपि वेतनौन्नत्यकार्यं प्रभुत्वेन अवश्यकर्तव्यं भवति । तर्हि सर्वेषां प्रभुत्वोद्योगिनां वेतनाधिक्यकरणे प्रभुत्वस्य आदायः अधिकतया वर्तितव्यः भवेत् । प्रजाभ्यः करग्रहणेन प्रभुत्वादायाधिक्यं कर्तुं शक्यते इति चेत् तदा प्रजानां कष्टस्थितिः भवेत् । तस्मिन् समय एव क्रयवस्तूनां मूल्यं अधिकं भवेत । अनन्तरपदमेव विक्रयवस्तूनां मूल्यं च अधिकं भवेत् । एवं सति प्रभुत्वोद्योगिनां प्रजानां च आवश्यकवस्तूनां मूल्यस्य आधिक्ये सति वेतनौन्नत्यकरणेन को वा लाभः भवेत् इति चिन्तनीयो भवति । रूप्यकमूल्यह्रासकाले अधिकवेतनालाभे कथं वा उद्योगिनः नित्यकृत्यानि सम्यक् कुर्युः इत्यपि च विचारणीयं भवति । तस्मात् प्रभुत्वं, धूमशकटकार्मिकोद्योगिनः अन्ये च राजकीयनायकाः देशश्रेयः मनसि निधाय परस्परं संभाष्य एतत्कार्यस्तंभनं निरास्य स्वार्थपरत्वं विहाय च देशक्षेमाय मार्गदर्शकाः भवेयुरिति वयं सप्रश्रयं प्रभुत्वम् राजकीयनायकान् धूमशकटकार्मिकान अन्यांश्च प्रार्थयामः । शीघ्रमेव प्रजानां यानायानसौकर्यं भवेदिति च अभिलषामः ।

# वसन्तविपिनम्

श्री गोवर्धनाचार्य गलगली, बेंगलूरु - १०.

प्रत्यूषे विततां निशाजवनिकामुत्सारयन् विश्वसृक्
वासन्तं जगतीतलं प्रकुरुते गान्धर्वरङ्गस्थलम् ।
मुक्ताविद्रुमपद्मरागविलसत्सद्रावपात्रोद्गता
सौम्या शीतलसुप्रभा वसुमतीं प्राचीदिशो व्याप्नुते ।।

पीतारक्तहरित्सु सन्ति शतशो यावत्प्रकारा भुवि
तद्वर्णैर्नवपल्लवै स्तरुलतागुल्मादयो मण्डिताः ।
नूत्नं ते कुसुमाकाराख्यनृपतेः कुर्वन्ति सत्तोरणम्
पुष्पामोदभरात् सुखं च जनयन्संवाति मन्दानिलः ।।

रूपस्पर्शसुगन्धसर्वविषये सौन्दर्यसाराणि या-
न्याविन्दन्ति समस्तलोकविजये तूणेऽभवन्सायकाः ।
तत्पुष्पाणि सहस्रशो बहुविधान्याकीटमोदप्रदा-
न्यर्धोन्मीलितसुन्दराणि निभृतं नेत्रोत्सवं कुर्वते ।।

एवं वर्षति भूनभः परिसराल्लावण्यसारामृतम्
काले सर्वचराचरे सुनिभृतं दत्तेक्षणे शृण्वति ।
भृङ्गाश्चारुविहङ्गमाश्च मधुरं सङ्गीतमातन्वते
हृष्टो वृक्षगणः करोति सुमनोवृष्टिं शिरःकम्पयन् ।।

# महाश्वेतायाः वृत्तान्तः

श्री मेडिशेट्टि शिवगणेश्बाबु, पेद्दापुरम्.

पुरा खलु भगवतो दक्षस्य प्रजापतेः अतिप्रभूतानां मध्ये कन्यकानां द्वे सुते मुनिररिष्टा च बभूवतुः । अरिष्टायास्तु पुत्रस्तुम्बुरुप्रभृतीनां षण्णां सोदर्याणां ज्येष्ठो हंसो नाम गन्धर्वः राजा, तस्य हेमकूटो नाम पर्वतः निवासः । स सोममयूखसम्भवादप्सरः कुलात् समुद्भूतां गौरीं नाम कन्यां प्रणयिनीमकरोत् । तयोः दम्पत्योरेव सुता 'महाश्वेता' अन्वर्थनामधेया । सा पितृभवने बालतया कलमधुरप्रलापिनी वीणेव गन्धर्वाणामङ्कादङ्कं सञ्चरन्ती, शैशवमतिनीतवती । क्रमेण च कृतं वपुषि तस्याः कुसुम इव मधुकरेण नवयौवनेन पदम् ।

अथैकदा मधुमासदिवसेषु स्वाम्बया सममच्छोदसर, मुनितनयश्चित्ररथखानितम् स्नानार्थमगच्छत् महाश्वेता । तत्तन्मनोहरोद्देशदर्शनलोभाक्षिप्तहृदया तत्र तत्र सखीजनेन व्यचरत् । एकस्मिन् प्रदेशे झटिति वनानिलोपनीतम् अनाघ्रातपूर्वम् कुसुमगन्धमभ्यजिघ्रत् । 'कुतोऽयम्' इत्युपारूढकुतूहला कतिचित्पदानि गत्वा, अयुग्मलोचनं वशीकर्तुकामं काममिव सनियमम अतिमनोहरम्, सवयसा सह स्नानार्थमागतं मुनिकुमारकमपश्यत् । तेन च कर्णावतंसीकृतां पारिजातकुसुममञ्जरीं अभिवीक्ष्य 'अस्यानन्वयं परिमलः' इति मनसा निश्चित्य, ईक्षमाणा तपोधनयुवानम् तं, परवशीकृता चाभवत् नवयौवनसुलभेन कुसुमायुधेन ।

अथ कृतप्रणामायां तस्यां महाश्वेतायां, तद्विकारदर्शनापहृत-धैर्यं तमपि कुमारं तरलतामनयदनङ्गः । अथ मुहूर्तमिव स्थित्वा, तं द्वितीयमस्य सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छत् महाश्वेता— 'भगवन् ! किमभिधानः ? कस्य वाऽयं तपोधनयुवा ? किं नाम्न-स्तरोरियमनेनावतंसीकृता कुसुममञ्जरी' इति । स तु अब्रवीत्— "मुनिबालकोऽयं, महामुनिश्वेतकेतुलक्ष्म्योः मानसपुत्रः, पुण्डरीक-नामधेयः, सकलविद्याकलापश्च । सोऽयं सम्प्रति चतुर्दशीति भग-वन्तं भवानीपतिमुपासितुमागतः । इयं च पारिजातकुसुममञ्जरी रूपातिशयबद्धादरया मार्गसङ्गतया नन्दनवनदेवतया समर्पिता अनिच्छितोऽपि अस्य मया कर्णपूरीकृता ।" इति ।

इत्युक्तवति तस्मिन् पुण्डरीकः समुपसृत्य आत्मीयात् श्रव-णादपनीय तां कुसुममञ्जरीं महाश्वेतायाः कर्णपुटे अकरोत् । तत्क्षणं लज्जया सह तत्करतलात् गलितां तेन अज्ञाताम अप्राप्ता-मेव भूतलम अक्षमालां गृहीत्वा सलीलं सा कण्ठाभरणतामनयत । अत्रान्तरे छत्रग्राहिण्या आहूता सा, पुण्डरीकेण अलीककोपपूर्वकं अक्षमालार्थं निरुद्धा सती तामक्षमालां प्रत्यर्पयामास । स्नानान्त-रम कथमपि सखीजननीयमाना सा अम्बया समम् भवनम् अया-सीत । गत्वा च प्रविश्य कन्यान्तःपुरम्, तत प्रभृति तद्विरहातुरा सर्वान् व्यापारानुत्सृज्य एकाकिनी निस्पन्दतिष्ठत् ।

इह पुण्डरीक तपोधनयुवाऽपि मन्मथावेशस्य कोटिं परा-मध्यगच्छत् । कपिञ्जलः पूर्वोक्तः तस्य सवयस महाश्वेताभवनं गत्वा मित्रस्य मदनसन्तापं निवेद्य, तदपनोदनार्थं तां प्रार्थयत । तदा 'दिष्ट्याऽद्यमनङ्गो मामिव तमप्यनुबध्नाति' इति चिन्त-यित्वा सर्वानन्दहृदया अभवत् । सा अस्वस्थशरीरा इति परि-जनात् ज्ञात्वा तस्याः अम्बा तत्रागत्य सुचिरं स्थित्वा स्वभवन-मयासीत् । तया तु तत्रागत्य 'किं कृतम्, किमभिहितम्' इति सर्व-

मेव शून्यहृदया नालक्षयत् । गतायां च तस्यां, अस्तमुपगते भगवति सवितरि, किंकर्तव्यतामूढा, सा स्वीयताम्बूलकरङ्कवाहिनीं तरलिकामपृच्छत्– अयि तरलिके! उपदिशतु मे भवती, यदत्र साम्प्रतम् । अयमेवं त्वत्समक्षमेवाभिधाय गतः कपिञ्जलः । यदि तावत् इतरकन्यकेव लज्जां विहाय, जनापवादमचिन्तयित्वा, सदाचारमतिक्रम्य, स्वयमुपगम्य, पाणिं ग्राहयामि, तदा गुरुजनातिक्रमादधर्मो महान् । अथ धर्मानुरोधादितरपक्षमङ्गीकरोमि, नियतं स्पृशेन्मां मुनिजनवधजनितम् महत् पातकम्' इति ।

तदा समुपारूढरागचन्द्रमण्डलवीक्षणेन मूर्च्छां प्राप्ता महाश्वेता । तरलिकया सेविता, उक्ता च सा स्वयमेव पुण्डरीकनिकटं गन्तुमुद्युक्तवती । उच्चलितायाश्च तस्याः दुर्निमित्तनिवेदकमस्पन्दत दक्षिणं चक्षुः । उपजातशङ्का यथाकथञ्चित् अलङ्कृता तरलिकया अनुगम्यमाना गूढेन पथा कन्यान्तःपुरान्निरयासीत् । सरसः पश्चिमतीरं प्राप्य, तत्र कांचित् रुदितध्वनिं नातिव्यक्तामुपालक्षयत् । दक्षिणेक्षणस्फुरणेन मनस्याहितशङ्का सभयं तदभिमुखं अतित्वरितमगच्छत् । 'हा हतोऽस्मि ! हा किमिदमापतितम्! हा दुरात्मन् मदन ! निर्घृण ! किमिदमकृत्यमनुष्ठितम् । हा दुर्विनीते महाश्वेते! किमनेन तेऽपकृतम्; आः पापदुश्चरित चन्द्रचण्डाल ! कृतार्थोऽसीदानीम् ।' इत्येतान्यन्यानि च विलपन्तं कपिञ्जलमद्राक्षीत् ।

तच्च श्रुत्वा, दूरादेव मुक्तैकताराक्रन्दा, यथाशक्ति त्वरितैः पादप्रक्षेपैः पदे पदे प्रस्खलन्ती, तं प्रदेशं गत्वा सरस्तीरसमीपवर्तिनि शशिमणिशिलातले विरचितं मृणालमयं शयनमधिशयानं तत्क्षणविगतजीवितं तं सा महाश्वेता जीवितनाथमद्राक्षीत् । उद्भूतमूर्च्छान्धकारा सा शोकोन्मत्ता इव भूत्वा मरणैकनिश्चया तरलिकामादिदेश चितां विरचितुम् । अत्रान्तरे चन्द्रमण्डलविनि-

गतो दिव्याकृतिः पुरुषः मृणालधवलाङ्गुलिभ्यां बाहुभ्यां तमुपरत-मुत्क्षिपन्– वत्से ! महाश्वेते ! न परित्यज्याः त्वया प्राणाः । पुन-रपि तवानेन सह भविष्यति समागमः’ इत्यभिधाय सहैवानेन गगनतलमुदपतत् । कपिञ्जलस्तु ‘दुरात्मन् ! क्व मे वयस्यमपहृत्य गच्छसि’ इयभिधाय, तमेवानुसरन् अन्तरिक्षमुदगात् ।

महाश्वेता तु द्वितीयेनेव प्रियमरणेन कपिञ्जलगमनेन द्विगुणीकृतशोका तस्मिन्नेव सरस्तीरे तरलिकाद्वितीया क्षपां क्षपित-वती । प्रत्युषसि तूत्थाय तस्मिन्नेव सरसि स्नात्वा, कृतनिश्चया, तमेव कमण्डुलमादाय, तान्येव च वल्कलानि, तामेवाक्षमालां गृहीत्वा, ब्रह्मचर्यमाश्रित्य, बुध्वा निस्सारतां संसारस्य देवं अनाथ-शरणं स्थाणुं आश्रितवती । मातापितृबन्धुवर्ग गृहगमनाय तस्याः प्रयतमानः दृढनिश्चयां तां विसृज्य निराशः सशोक एव गृहानया-सीत् । महाश्वेता तु पुनः प्रियपुण्डरीकसमागमप्राप्तिपर्यन्त स्वीय-तपोनियमम् न त्यक्तवती । अहो ! अत एव खलु– महच्चित्रम् चित्यम् च । ‘विधिर्बलीयसी’ इत्युच्यते बुधैः ।।

# आनन्दवत्सरस्य प्रस्तावः

अयं वत्सरः षष्टिवत्सरेषु अन्यतमः । षष्टिवर्षेभ्यः अनन्तर मागतवान् । चान्द्रमानेन अयं वर्षः भानुवासरे २४-३-७४ तिथौ प्रादुरासीत् । सौरमानरीत्याऽपि अब्दप्रारम्भः भानुवासरे आसीत् । चान्द्रमानेन यस्मिन् दिने वत्सरारम्भः भवति, तस्य दिनस्य अधिपः राजा, यस्मिन् दिने सौरमानेन वत्सरारम्भः, तस्य दिनस्य अधिपः मन्त्री च भवतः । तदनुक्रमेण अस्य वत्सरस्य राजा, मन्त्री च सूर्य एव भवति । सूर्यस्तु मूर्तित्रयात्मकः, कर्मसाक्षी, जगच्चक्षुः, प्रत्यक्ष-देवता, इत्येवं वेदेभ्यः पुराणादिभ्यश्च ज्ञायते । परन्तु दैवज्ञा त मन्यथा वदन्ति ।

प्रजाः विशेषतः नूतनवत्सरारम्भदिने आबालवृद्धं प्रातरेव कृतमङ्गलस्नानाः, धृतनूतनांशुकाः, कलिताभरणाः सानन्दं व्यराजन्त । स्त्रीभिः गृहाणि, गृहद्वाराणि च रङ्गवल्यादिभिः सुन्दर-मलङ्कृतानि । प्रातः प्रथमतः, गुडसम्मिश्रिते, नूतनतिन्त्रिणीफल-रसे, निम्बकुसुमानि चूतशलाटुशकलानि मेलयित्वा, भगवते निवेद्य सर्वे प्यसेवन्त । एतादृशरसायनसेवनेन, आधयः, व्याधयश्च मनुजं न स्पृशन्तीति आयुर्वेदविदा माशयः । "नूतनपञ्चाङ्गमानीय गन्धाक्षतादिभिः अलंकृत्य देवतायतने निक्षिप्य विशेषतो देवपूजां, पञ्चाङ्गपूजां च कृत्वा षड्रसोपेतं भक्ष्यभोज्यादिकं, फलादिकं च निवेद्य, सदक्षिणाकं, ताम्बूलं विज्ञाय, विप्राय दत्वा, तन्मुखतः राजादिनवनायकफलं, कन्दायफलं, आयव्यय - राजपूज्यतापमानादि अश्रृण्वन् ।

किन्तु पञ्चाङ्गश्रवणेन उत्साहः ईषदिव कण्ठितोऽभवत्। अस्मिन् वत्सरे नवनायकेषु, षट्पापिनः त्रय एव शुभाः इति सिद्धान्तिनः अवदन्। पापिनः अधिकारदुर्विनियोग मेव कुर्युरिति अनुभवसिद्ध मेव खलु अस्माकम्। कुत्रचित् अनावृष्टिः, कुत्रचित् अतिवृष्टिः, प्रजासु अन्योन्यकलहः, स्फोटककलरादि रोगबाधाः, चोराग्निशस्त्रपीडाः, क्षामः, सस्यनाशः एवंविधाः बहुधा अश्रूयन्त, येन भयात् रोमाञ्चोऽपि अजायत।

तत्र तत्र राष्ट्रेषु विद्यमानायाः स्थितेः पर्यवेक्षया पञ्चाङ्गोक्तफलं अक्षरशः सत्यमेव भविष्यति किमु इति बुद्धिरपि जायते। घृतशाके (नेतिबीरकाय) यथा घृतं नास्ति, तथा आनन्दाख्ये वत्सरे आनन्दो न भवे द्वा इति शङ्का उत्पद्यते। अतीते आनन्दवत्सरे देशस्य स्थितिः कीदृशी आसीदिति केचन वृद्धाः परं जानन्ति। अद्यतनानन्दवत्सरे स्थितिं वयं साक्षात् अनुभविष्यामः।

विरळतया पाठशालासु विद्यार्थिनां अनुपस्थितिः अङ्कुरिता। आपणानां बन्धनमपि प्रारब्धम्। वैद्यशाखीयानां कार्याऽकरणम् च दृश्यते। घूर्जरसभायाः (Assembly) तिरस्कृति आसीत्। केन्द्रप्रभुतया एतत् तिरस्कृतिः पूर्वमेव कार्या आसीत्। घूर्जरराष्ट्रपरिस्थितिः बीहारराष्ट्रे इदानीं प्रतिफलिता वर्तते। तत्र विद्यार्थिनः प्रलयमेव असृजन्। शासनसभोद - योगिनां मन्त्रिणां च केशाकेशि मुष्टीमुष्टि च संवृत्तम्।

घूर्जरे समुत्पन्ना आन्दोलना, बीहारे व्याप्ता, परिसरराष्ट्रेष्वपि संक्रान्ता अवश्यं भवितेति राजनीतिज्ञाना मभिप्रायः। प्रतिराष्ट्र मेवविधा दुःस्थितिः जायेत यदि, पालकानां पालनासौलभ्यं, प्रजानां च जीवितसौख्यं गगनकुसुममेव भवेत्। विनाशकार्यसरणेः विद्यार्थिनः निवारणीयाः। प्रभुत्वपक्षः, प्रतिपक्षाश्च ऐकमत्येन,

एतादृशदुरागतानां विनिवारणे कृतप्रयत्नाः बद्धश्रद्धा धृतकङ्कणाश्च भवेयुः ।

अस्मिन् वत्सरे सर्वेपि जनः स्वस्वविधिं साधु सकाले निर्वर्तयतु । अपि च विद्वांसः धनिकाः मताचार्याः ग्रहस्थितिं सम्यक् विचार्य यथाशास्त्रं यथोचितं च देवयजनादि यथेष्ट कुर्वन्तु, कारयन्तु, येन ग्रहाणां क्रूरता विलुप्ता भूत्वा लोककल्याणं भवेत् ।

अयं वत्सरः सर्वथा अन्वर्थनामा भूया दिति आशास्महे ।

आदित्यादि ग्रहास्सर्वे, सनक्षत्रा स्सराशयः
कुर्वन्तु मङ्गलं नित्यं, सुप्रसन्ना जनार्चिताः ।।

---

ये न मित्रस्य दुःखेन दुखिनः सन्ति मानुषा ।
ते नरा नरक यान्ति महापातकभागिनः ।।

तुलसीदासः

हृदीश्वरं दृशं लक्ष्ये निधाय बलमात्मनि ।
सिद्धामाप दयानन्दो देशकल्याणकल्पनाम् ।।

अरबिन्दो घोषः

सानुकम्पा दरिद्रेषु पतितेषु पामरेष्वपि ।
ईश्वरकृपया गुप्ता धीरा भारतवासिनः ।।
समुद्धाराय देशस्य समाजस्य समृद्धये ।
वैशिष्टयाय मिथः प्रीता भवामः सजवा वयम् ।।

स्वामी विवेकानन्दः

# आनन्दो ब्रह्म–!

"अवर:"

आनन्दोदय-प्रभात-समये
प्रमाद-भरिता प्रमदा सुप्ता !
अन्तिम-यामान्ते कृतरतिना
कान्तेनाऽतिक्लान्ता कान्ता ! !

व्यासोऽकीर्तयदुच्चैरित्थम्–
"आनन्दो नन्दनो नन्दी"ति,
"वत्सरो वत्सलो वत्सी"त्यपि च;
बाढं,–
भवतु मदीयं कीर्तनं गाढम् ॥

आनन्दाब्दो वर्षतु कामं;
जनो जनो नन्दतु प्रकामं;
वत्सरो ह्ययं वत्सलो भवेत्;
मत्सरोऽपि चेद्गच्छतान्नः ॥

भगवानप्येवं किल प्राह–
"काल: कलयतामस्मीति;
कालोऽस्मि लोकक्षयकृदित्यपि च;
बाढं,–
भवतु तदीयं कलनं काले काले ॥

न केवलं संकलनं व्यवकलनं वा
किन्तु तदीयं कलनं माध्वीक-मृद्वीकम्;
न केवलं प्रमादालस्य मोहानां कलनम्
किन्तु उत्साहानन्दज्ञानानां संकलनम् ॥

# उत्तमे शिखरे जाते – !!

"अवरः"

दशाब्दद्वयात् पूर्वं वृत्तमिदम् । चित्तूरुमण्डले (आं. प्र.) पलमनेरु उपमण्डलान्तर्वर्ति ग्रामवासी कश्चित् प्राचीनाचारसम्पन्नो विप्रः कदाचित् तिरुपतिनगरं गतः । स ब्रह्मोत्सवकालः । तदानीं तिरुमल-तिरुपतिदेवस्थानधर्मकर्ता हाथी - रामजी - परम्परागतः "महन्त्" नामकः कश्चिन्मठाधिपतिः वेङ्कटगिरे रुपरि अधश्च देवस्थान - कार्य - निर्वाहकः सर्वाधिकारी च आसीत् । उत्सवकाले महन्त - मठे उत्तरभारतादागतानां यात्रिणां कृते भगवतः श्रीनिवासस्य माहात्म्य-लीला-चित्राणां प्रदर्शन मायोजितम् । तत्सन्दर्शनार्थं तिरुपतिं गतः विप्रोत्तमः महन्तमठं कथञ्चित प्रविवेश । केवल मुत्तरभारतयात्रिणां कृते समायोजिते तस्मिन् प्रदर्शने अन्येषां प्रवेशो दुर्लभ आसीत् । द्वाःस्थस्य अनवधानन प्राप्तावकाशः अयं विप्रः मठं प्रविश्य कुड्यचित्राणि संपश्यन्नग्रेसरंश्चाऽसीत् । एव पुरस्सरन्तं तं विप्रं स्वयं महन्तमहाशयोऽपश्यत् । स हिन्द्या मपृच्छच्च "कहाँ जाते ? हिन्दीभाषानभिज्ञ विप्रोत्तमः सस्थैर्यं सदृढस्वरं उच्चैः प्राहः– "उत्तमे शिखरे जाते" इति ।

महन्त प्रश्नस्य– को भवान् ? कुतस्त्व मागतोऽसि ? कथ मत्र प्रविष्टोऽसि ? इदं प्रदर्शनं केवल उत्तरदेशादागतानां यात्रिणा मेव कृते कृतम । भवता न गन्तव्य मिति भाव प्रतिध्वनितः । हिन्दी मजानन्नपि विप्रः उत्तरभारतीयानां संस्कृताभिमानं जानाति ।

अत स्सधैर्यं सन्ध्योपस्थानश्लोकपादेन "उत्तमे शिखरे जाते" इति उत्तरयामास । तदीयां समयस्फूर्ति अवगच्छन् सस्मितं महन्तमहाशयः तं विप्रं "जाव्" इति अनुज्ञातवान् । "अहमपि तिरुमलयात्री" इति शाब्दबोधः महन्तमहाशयस्य विप्रोक्तात् "उत्तमे शिखरे जाते" इत्यस्माज्जातः स्यादिति मन्ये ।

---

## बालसुभाषितानि

ले. श्री वैद्य रामस्वरूपशास्त्री, संपादकः, बालसंस्कृतम्, बम्बई-८६.

हंसो न भाति बलिभोजनवृन्दमध्ये
गोमायुमण्डलगतो न विभाति सिंहः ।
जात्यो न भाति तुरगः खरयूथमध्ये
विद्वान् न भाति पुरुषेषु निरक्षरेषु ।

हंसो विभाति नलिनीदलपुञ्जमध्ये
सिंहो विभाति गिरिगह्वरकन्दरासु ।
जात्यो विभाति तुरगो रणयुद्धमध्ये
विद्वान् विभाति पुरुषेषु विचक्षणेषु ॥

शास्त्रं सुचिन्तितमथो परिचिन्तनीयं
संसेवितोपि नृपतिः परिसेवनीयः ।
अङ्के धृतापि युवतिः परिरक्षणीया
शास्त्रे नृपे च युवतौ च कुतो वशित्वम् ॥

# मुकुन्दविलासः

श्री कुण्टिमद्दि शेषशर्मा, अनन्तपुरम्.

(पूर्वानुबन्धः)

सरसीरुहपाणिसिन्धुकन्यामणिनाथस्य तु यस्य पादयुग्मम् ।
भवसागरतुङ्गभङ्गनौका वसुदेवात्मजमन्वहं भजामि ॥

इति लीलालोलमुकुन्दविलासः ।

---

अथ शरण्यमुकुन्दविलासः ।

बहुजननमुकर्मराशिपाक प्रभवरमारमणानुरागयोगात् ।
मम समजनि यत्पदाब्जभक्तिः, शरणमुपैमि मुकुन्दपादयुग्मम् ॥

गुरुवरकरुणासमीरिताष्टाक्षरिमनुगजधनाढ्य एषनान्यम् ।
भवजलधितरिं विना भजेहं, शरणमुपैमि मुकुन्दपादयुग्मम् ॥

कलशजलधिजास्तनाङ्गरागारुणितपुनर्भवकान्तिपूरगङ्गम् ।
कमलजकरवारिजातधौतं शरणमुपैमि मुकुन्दपादयुग्मम् ॥

सुरभिळमुकुमारचारुदीव्यद्दरविकसच्छनपत्रगर्वहारि ।
मधुरमुरसरिन्मरन्दपूरं, शरणमुपैमि मुकुन्दपादयुग्मम् ॥

कपिलमुनिरुपापरासुभूभृत्तनयततिं मृग्लोकमानयन्त्याः ।
अपि सुरसरितः प्रसूतिहेतुं शरणमुपैमि मुकुन्दपादयुग्मम् ॥

अपि सनकसनन्दनादियोगि प्रकरमनोम्बुजमत्तचञ्चरीकम् ।
नतसुरमणिमौळिकान्तिदिग्धम् शरणमुपैमि मुकुन्दपादयुग्मम् ॥

भयदभवपयोधितुङ्गभङ्गाऽऽकुलितनरार्तिनिवारणैकदीक्षम् ।
श्रितदुरिततमस्ततेः १ पतङ्गं शरणमुपैमि मुकुन्दपादयुग्मम् ॥

स्फुरतिमनसि यद्यदन्तकाले पुनरनुगच्छति तत्तदेवजन्म ।
अविरत मतएव सर्वथाहं शरणमुपैमि मुकुन्दपादयुग्मम् ॥

शरणमुपगतः पयोधिकन्यारमणपदद्वयमेकवारमेव ।
न च पतति भवे पुनरस्य यस्मात् शरणमुपैमि मुकुन्दपादयुग्मम् ॥

जलनिधि दुहितुर्मृदूपधानायितकमनीयमनोहरोरुभागे ।
विनिहितमतुलं प्रपन्नगम्यं शरणमुपैमि मुकुन्दपादयुग्मम् ॥

दरकरचरणाब्जदासशेषग्रथितमिदं मुरभिद्विलासरम्यम् ।
हरिपदयुगळी सुमं सुवर्णं भवतु मुकुन्दविलासनामकाव्यम् ॥

श्रीश्रीनिवासकरुणाल्लहरीप्रफुल्ल
गीर्वाणकाव्यरचनापरिणद्धबुद्धिः ।
शेषस्समर्चति मुकुन्दपदाब्जयुग्मं
कृत्वाकृतिं ननु मुकुन्दविलासनाम्नीम् ॥

१ सूर्य ।

# श्रीसिंहाचलक्षेत्रमाहात्म्यम्

**श्री जम्पन लक्ष्मीनरसिंहशास्त्री.**

श्रीसिंहाचलक्षेत्रं विशाखपत्तनस्य पञ्चक्रोशदूरे अस्ति। कृतयुगे जगत्कंटकायमानः हिरण्यकशिपः स्वपुत्रं प्रह्लादं विद्याभ्यासार्थं गुरुकुलं प्रेषयामास। प्रह्लादस्तु हरिलग्नहृदयः तन्नामस्मरणमेव कुर्वन्नास्त। एवं स्थिते गुरवः एतद्विषयं प्रह्लादपितरि निवेदयामासुः। हिरण्यकशिपः स्वशत्रुनामस्मरणे बद्धश्रद्धं कुमारं बहुधा पीडितुं आदिदेश भटान्। प्रह्लादस्तु तदानीमपि स्वकर्म न विरराम। राक्षसेन्द्रः स्वपुत्रं पूर्वसमुद्रे पातयितुं आदिदेश। अनुचराः ते निशाचराः तथा कृत्वा तद्विषयं राज्ञे निवेदयामासुः। हरिभक्तः प्रह्लादः समुद्रे निपत्य त्राहि इति आर्तत्राणपरायणं वैकुंठवासं श्रीमन्नारायणं प्रार्थयामास। तदार्तनादमाकर्ण्य विष्णुः समुद्रगर्भगतं प्रह्लादं संरक्ष्य अभयं दत्तवान्। अन्यस्मिन् दिने दुराचारे अतिभूमिं गतं हिरण्यकशिपं संहर्तुं महाविष्णुः अहोबलपत्तनं प्राप्य नृसिंहरूपेण स्तम्भात् आविर्भूय हिरण्यकशिपोः हृदयं विदार्य प्रह्लादं अहोबलसाम्राज्याभिषिक्तं कृत्वा "प्रह्लाद! तव यदा राज्यविरक्तिः स्यात् तदा त्वत्पौत्रं राज्ये नियुज्य सिंहाचलक्षेत्रमागच्छ। नृसिंहवराहरूपाभ्यां प्रत्यक्षीभूय ते मुक्तिं दास्यामि इत्युक्त्वा अन्तर्हितोभवत्।

अनन्तरं प्रह्लादः स्वीकृतगार्हस्थ्याश्रमः सततं हरिनाम स्मरणमेव कुर्वाणः ईषत्काले यौवनाद्यवस्थाः नीत्वा स्वपौत्राय राज्यं दत्वा मोक्षार्थी भगवदाज्ञानुसारेण तन्निर्दिष्टपर्वते तदाराधनं

कुर्वन्नास्त । श्रीमन्नारायणोपि तद्भक्ति मङ्गीकृत्य सिंहशैले मालती निकुंजे आविरभूत् ।

प्रह्लादः तेन संतुष्टः साष्टाङ्गदण्डप्रणामादिकं कृत्वा विश्वकर्मनिर्मितविमाने स्वामिनं प्रतिष्ठाप्य षोडशोपचारार्चनादिकं कृत्वा तत्र पत्तनमेकं निर्मापयामास । भगवदाज्ञया अद्यापि तत्र गङ्गायमुनासरस्वतीत्यादि नद्यः धारारूपेण प्रवहन्ति ।

**ब्रह्मादीनां सिंहाद्रिपर्वतागमनम्**

एकदा ब्रह्मा नृसिंहरूपगतं जगदीश्वरं द्रष्टुकामः क्षीरसागरशायिनं श्रीमन्नारायणं ससेव्य "प्रभो, लोकरक्षणार्थं यानि रूपाणि त्वया प्राप्तानि तानि सर्वाणि दृष्टानि । किन्तु नृसिंहरूपं न दृष्टम् । तस्मात् शान्तस्वरूपः भूत्वा मयि अनुग्रहं दर्शय । इति प्रार्थयायाम । अनन्तरं नारायणोपि "शान्तसंकल्पमनाः भूत्वा" श्रीसिंहाद्रौ प्रह्लादेन पूजितवानस्मि । चैत्रशुक्लएकादशीदिने भक्ताग्रगण्येन प्रह्लादेन कल्याणमहोत्सवः निर्णीतः । त्वं तदा मां दृष्ट्वा यथाविधिमर्चय । किं च दृष्टकल्याणमहोत्सवाः मानवाः सर्वपापेभ्यः मुक्ताः भूत्वा मल्लोकं अवाप्नुयुः इत्यवोचत् । अनन्तरं ब्रह्मा प्रह्लादार्चितं स्वामिनं संदर्श्य सत्यलोकमवाप ।

**पुरूरवस्थ स्वामिसाक्षात्कारः**

इत्थं परमभक्तेन प्रह्लादेन आराधितस्य नृसिंहरूपस्य हरेः निलयः सिंहशैलः प्रह्लादानन्तरं शिथिलीभूय क्रमतः वृक्ष कुंजाद्युपेतः पूर्णं, शोभां विससर्ज ।

कालेगते षट्चक्रवर्त्यन्यतमः पुरूरवः एकदा विहारार्थं ऊर्वश्यासहविमानारूढः दक्षिणादिशं प्रति प्रतस्थे । तच्च

विमानं सिंहाचलसमीपे अचलमेव अभवत्। तदृष्ट्वा पुरूरवः विमानगमनावरोधकारणं विचारयितुं आरेभे। तदा प्रह्लादेन भक्ताग्रगण्येन प्रतिष्ठितः आराधितश्च स्वामी अस्मिन्नेव अचले यत्र कुत्र वा तिरोहितः स्यात्। तद्दर्शनेन अभीष्टसिद्धि भविष्यति इति अशरीरवाणी अवदत्। तदाकर्ण्य पुरूरवः तद्दर्शनाभिलाषी स्वामिनं अन्वेष्टुं आरभत। दिनत्रयानन्तरं स्वामी पुरूरवस्य स्वप्ने प्रत्यक्षीभूय "पुरस्तात् स्थितासु लतासु अहमस्मि पश्य" इत्यादिदेश। अनन्तरं पुरूरवः स्वामिनं संदर्श्य पूजां अकार्षीत्। तद्दिवसः वैशाखशुक्लतृतीया। अत एव अद्यापि भक्ताः तस्मिन् दिने लताप्रत्याम्नाय कल्पितं चन्दनानन्तर्गतं स्वामिनं तदपसारणेन संदर्श्यनेन मोक्षं लभन्तेति कथा श्रूयते।

# मनोरञ्जनम्

एको बालकः– मनुषस्य द्वौ हस्तौ स्तः। किन्तु जन्तूनां हस्तौ किमर्थं ईश्वरेण न निर्मितौ?

अपरोबालकः– किमर्थमित्युक्ते जन्तवः मनुष्याणां गृहेषु प्रविश्य हस्तभ्यां गृहीत्वा सर्वाणि भक्ष्याणि भक्षयेयुः इति मन्ये।

# तिरुवेंगडाचार्य अस्तमयमुद्दिश्य सन्तापः

विद्वान्, वैद्यविद्वान्, सर्वतन्त्रस्वतन्त्र, विद्यानिधि, कवीश्वर

**श्री अल्कूरु गोल्लापिन्नि वासुदेवशास्त्री**

हे दिव्ये! दिव्यजननि! सुरभारति चिन्त्यतां
तिरुवेंकटसूरिस्तु मुरारिपुरमभ्यागात्
आंध्रेषु राट्सु सीमासु का गतिस्तव सुव्रते
कलिप्रकोपबाहुळ्यदोषैर्बहुभिराकुलं ॥

भारतं वर्षमालोक्य केशवाय निवेदितुम्
गतो वा सुविरक्तो वा श्रीमानाचार्यसत्तमः
इति चिन्तापरान्सर्वे बुधाश्शोकाकुलेक्षणाः
किं कुर्मः दुर्विधेश्चेष्टा ज्ञातुं वक्तुं न शक्यते ॥

रत्नराशिसमाक्रान्तरथ्यामण्डितमण्डलम्
कृष्णरायमहीजाने पालने प्रथितं बहु
तदद्यघोरदारिद्र्यराक्षस्यालिङ्गितं मुहु
तस्मिन् क्रान्ते प्रसूतस्तु तिरुवेंकटपण्डितः ॥

गैर्वाण्याः पादससेवा कृतबुद्धिरभूत्किल
सर्वस्वत्यागसङ्कल्पपूर्विकामातुरचंका
कृतं पण्डितवर्येण तव पुत्रेण धीमता
शूरस्सद्गृणशाली च सन्मित्रबलवान् शुचिः ॥

तस्यापवर्गदाने च समर्थो भवति प्रभुः
भवत्यास्सुमहावृद्धिर्भविष्यति महेश्वरि
विश्वकर्तुः प्रभोश्चेष्टा देवदेवस्य शार्ङ्गिणः
भवत्या, ज्ञातपूर्वैषा तस्मात्त्यज मनोरुजम् ॥

[१३—४—१९७४ सर्वसभ्यसमावेशदिने एतत्समाकार्यदर्शिनः श्रीनागपूडि रामनाथार्याः, तेषां षष्ट्यब्दपूर्तिं पुरस्कृत्य, अभिनन्दिताः, सम्मानिताश्च कम्बलसमर्पणेन। तत्सन्दर्भे तेभ्यः समर्पितमभिनन्दनपत्रमिदम् । ]

संस्कृतभाषाप्रचारिण्याः
सभायाः कार्यदर्शिनां

श्रीमतां नागपूडि
रामनाथय्यर्
महाशयानां

अचिरसंप्रवृत्तषष्ट्यब्दपूर्ति-
महोत्सवं पुरस्कृत्य

चित्तूरु
संस्कृतभाषाप्रचारिण्या
सभया
सादरं सप्रेम च समर्प्यमाणं

# अभिनन्दनपत्रम्

अयि संस्कृतसेवाधुरीणाः !

भवन्तः षड्विंशतिवत्सरेभ्यः प्रागारभ्य संस्कृतभाषाप्रचारिण्याः सभायाः कार्यदर्शितां स्वीकृत्य सभामिमां सर्वतोमुखप्रवृद्धामुपपादितवन्त इत्येतत् सहृदयानां सर्वेषां प्रमोदस्थानम् ।

पञ्चविंशतिवर्षेभ्यः प्राक् आरम्भकृशा स्रोतस्विनीव येपेंडुशैलप्रदेशात् चित्पुरमिदं प्राप्तामिमां सभां सुरसरितमिव जटाधरः शिरसा धरन् तदादि तदुद्वहनश्रममविगणय्य, तस्यै रजतोत्सवं द्वित्रमासात् प्राक् सम्यक् सम्पादितवतां भवतां अधुना षष्ट्यब्दमहोत्सवं विलोक्य द्विगुणीकृतपरमानन्दनिर्भराः स्मः। भवतां संस्कृतसेवाप्रवणतां वर्णयितुं सहस्रफणामण्डलो द्विसहस्रजिह्वः शेषोऽपि नालम्।

भोः वंशानुगतपाण्डितीप्रतिभोल्लासाः!

भवतां पितामहाः श्रीनागपूडि कुप्पुस्वाम्यार्याः संस्कृतान्ध्रभाषापण्डितप्रकाण्डाः, बहुलान्ध्रसंस्कृतग्रन्थकर्तारश्च। भवतां पितृव्यपादाः पूर्वं भारतीयसर्वोच्चन्यायस्थाने न्यायाधिपतयश्च अभूवन्। अत एव कुलक्रमागतपाण्डित्यप्रकर्षः न्यायविवेकनैपुणं च भवतामाजानसिद्धमिति जानीमः।

एतादृशगुणगणसम्पन्नानां भवतां श्रीवेङ्कटेशः शतसंवत्सरं दीर्घायुषं अरोगदृढगात्रतां निस्तुलाः सम्पदश्च ददात्विति तं श्रीनिवासं सविनयं वयं प्रार्थयामहे।

इत्थं,

**संस्कृतभाषाप्रचारिण्यास्सभायाः**
**कार्यवर्गसभ्याः, अन्ये सदस्याश्च.**

# श्रीवेंकटेशस्तोत्रमाला

## 'स्फूर्तिश्रीः'

### प्रथम स्तबकः

न चाहं प्रमत्तो न चाहं विनीतो
न चाहं स्वतन्त्रो न चाहं प्रपन्नः ।
न जाने स्वरूपं ममैव स्वभावं
प्रसीद प्रसीद प्रभो वेंकटेश !

न चाहं विदग्धो न चाहं विमुग्धो
न चार्तो न चार्थी न भक्तो न युक्तः ।
तदाप्यप्रमेयो मयि त्वत् प्रभावः
प्रसीद प्रसीद प्रभो वेंकटेश !

न कोऽपि प्रवीणः स्वरूपावबोधे
न कोऽपि त्वदीय प्रशंसा धुरीणः
त्वमेव प्रपूर्ण स्त्वदन्यो विडम्बः
प्रसीद प्रसीद प्रभो वेंकटेश !

यथा मे मनोऽब्जे रजः प्लावनेच्छा
तथा दृष्टिमार्गे तमो गाढवृष्टिः ।
कथं वा भवेत् मे महान् सत्त्वलाभः
प्रसीद प्रसीद प्रभो वेंकटेश !

कुसङ्गाद् विहङ्गः कुलाये निलीनो
न शक्नोति पक्षौ यथेच्छं विधातुम् ।
कथं स व्रजेत्तं महोत्तुंगमद्रिम्
प्रसीद प्रसीद प्रभो वेंकटेश !

चिराभ्यासतन्त्रो नरो न स्वतन्त्रो
विमोहीव नित्यं परिभ्रान्तिमेति ।
तमुद्धर्तुमास्ते पृथिव्यां न शक्तिः
प्रसीद प्रसीद प्रभो वेंकटेश !

कदाचित् कथंचित् पुराप्राप्त पुण्यं
फलं संविधत्ते यदि स्याददृष्टम् ।
परं तद्विजाने तवाधीनमेव
प्रसीद प्रसीद प्रभो वेंकटेश !

अमेया गुणा ये त्वदीया उदीर्णा
नृणां वैखरी वाग् मिता सीमिता च ।
प्रयोक्तुं तदन्याश्चणाः केऽपि धन्याः
प्रसीद प्रसीद प्रभो वेंकटेश !

अविद्या मवद्यां यथासाध्यमाप्त्वा
महद्भ्यो महान्तं यथात्मानमीडे ।
कुतः काचमण्योर्वरेण्यो विवेकः
प्रसीद प्रसीद प्रभो वेंकटेश !

तथा प्रस्थितानां जनानां समाजे
उषित्वा कथं स्यामहम् तद्विभिन्नः ।
समुद्रात्प्रभिन्नस्तरंगः प्रवृत्तौ
प्रसीद प्रसीद प्रभो वेंकटेश !

(अनुवर्तते)

# अस्मत्सभाप्रधानमन्त्री

१३-४-१९७४ दिने एतत्सभापरिपालकवर्गोपाध्यक्षाणां श्री पि. राजगोपाऌनायुडुमहाशयानां आध्यक्ष्ये सम्पन्ने एतत्सभायाः सर्वसभ्यसमावेशे श्रीमान् बहुजनपल्लि शेषाचार्यः संस्कृतभाषा-प्रचारिण्याः सभायाः प्रधानमन्त्रिपदे निर्वाचितः ।

श्रीमान् शेषाचार्यः संस्कृते आन्ध्रे च पण्डितः । आदौ एतत्सभास्थापकेषु विद्वत्सु मुख्यः । तिरुपति संस्कृतकलाशालायां संस्कृतं अधीत्य पश्चात् आन्ध्रविद्वत्परीक्षायां उत्तीर्णः, विंशति-वर्षं यावत् चित्तूरुनगरे, ओङ्गोलुपत्तने च आन्ध्राध्यापको भूत्वा इदानीं विरतः ।

एतत्सभास्थापनदिनादारभ्य सभाकार्यक्रमनिर्वहणविषये समुचितसदालोचनादिदानेन सभाभिवृद्धौ लग्नचित्तः । एतन्महा-शयस्य प्रधानमन्त्रितया निर्वाचनेन सभायाः इतोधिका वृद्धिर्भवे-दिति सदस्यैः स्वाभिप्रायान् प्रकटयित्वाऽयमभिनन्दितः ।

प्रधानमन्त्रिनिर्वाचनानन्तरं सभानियमावलिमनुसृत्य अन्ये मन्त्रिणः प्रधानमन्त्रिणा नियुक्ता आसन् । ते यथा, श्रीकीला-त्तूरु श्रीनिवासाचार्यः, परीक्षामन्त्री, श्री पि. सुब्बराघवय्यः, निधि-मन्त्री, श्री के. मुनिरेड्डिः, प्रकाशकमन्त्री, श्री यन्. अनन्तराम-शास्त्री, प्रचारकमन्त्री च ।

एतत्समावेशे भूतपूर्वप्रधानमन्त्रिणः कुमारः श्रीमान् के. वी. राघवन् कार्यवर्गसभ्यतया निर्वाचितः ।

– वार्ताहरः

# ग्रामजीवनं

"काश्यप"

भारतदेशः व्यवसायदेशः । अत एव भारतदेशे बहवः ग्रामाः सन्ति । ग्रामैरेव नगर्यः परिपोष्यन्ते । ग्रामेषु व्यवसाय एव मुख्य वृत्तिः । तेन विविधवर्णाः ग्रामेषु निवसन्ति, पुरा विविधवर्णाः जनाः एककुटुम्बमिव अतिष्टन् । सर्वे वयोभेदं पुरस्कृत्य बन्धुरूपेण परस्परं आह्वयन्ति, कुलेषु एकः अग्रजः अन्यः अवरः इति भेदभावं स्थित्वापि बन्धुभावस्यैव प्राधान्यं दास्यन्ति । व्यवसायकार्येषु शुभाशुभेषु सर्वे सहायभूताः भवन्ति । अन्योन्यं उपकारः कुर्वन्ति ! शुक्रनीतिमनुसृत्य यदा कदापि अत्यवसरेषु विषयेषु अनृतं वदन्तु नाम न तु व्यर्थप्रसङ्गेषु ! अतिथीन् पुरस्कुर्वन्ति गुरून् विप्रान् सम्मानयन्ति वृद्धेषु च आदरं प्रदर्शयन्ति ! ये ये धर्मशास्त्रेषु विहिताः विख्याताः धर्माः सन्ति तानेव अनुसरन्ति । अद्यतनकाले वसुधैकप्रभुत्वं स्थापनीयमिति नायकमहाशयानां अधराग्रेषु विद्यते न कर्मणा तस्य उदाहरणप्रायाः भवन्ति । यदा आंग्लेयाः अस्माकं प्रभवः आसन् तदा प्रभृत्येव ग्रामेषु वेदेषु निबद्धधर्मेषु क्रमशः आदरभावो विनष्टः । महात्मा गान्धी प्रभृति महाशयानां नायकानां परिश्रमेण अस्माकं स्वतन्त्रभानूदयः आसीत् न प्रणष्टः धर्मोदयः । धार्मिकाः जनाः आंग्लप्रभुत्वे सूचीमुखप्रायेण धर्मः अतिष्टत् ग्रामेषु तदपि अधुना तु प्रणष्टः इति बाधां प्रकटीकुर्वन्ति ! अधुना विद्यमान नायकानां गान्धी नाममात्रमेव आदर्शभूतः । तेन महात्मना उक्तं न किञ्चिदपि कुर्वन्ति ! अस्माभिः अनुभूयमान स्वातन्त्र्यं नाममात्रमेव यदा पुनः प्रभुत्वं च प्रजाः धर्मगामिनः वदन्ति तदैव रामराज्यं अस्माकं अवतरतीति मन्तव्यम् । ग्रामस्वातन्त्र्यं एव देशस्वातन्त्र्यं देशसौभाग्यं इति मन्तव्यं ग्रामस्वातन्त्र्यमुखात् देशस्वातन्त्र्यं आगच्छतीति । ***

# विज्ञानवर्धिनोपरिषत्, बोब्बिलि.

## परिषदः विविधशाखाः

बोब्बिलि– यस्. रामगोपालराव्, कार्यदर्शी, विज्ञानवर्धिनी परिषत्, अग्रहारं वीधि, बोब्बिलि, श्रीकाकुलमण्डलम्.

पार्वतीपुरम्– जे. श्रीरामचन्द्रमूर्तिः, प्रधानाध्यापकः, प्रभुत्वोन्नतबालिकापाठशाला, पार्वतीपुरम्.

यं. आर्. नगरम्– यं. सत्यनारायण, अध्यापकः, अप्पर् प्रैमरी स्कूल्, यं. आर्. नगरम्, पार्वतीपुरम्.

तेर्लाम्– जि. के. यं. नायुडु, M. A. B. ED. अध्यक्षः, विज्ञानवर्धिनी परिषत्, तेर्लाम्, बोब्बिलि.

सावरकोट– यं. यस्. यस्. आर्. मूर्ती, आन्ध्रपण्डितः, परिषत् हैस्कूल्, सावरकोट, श्रीकाकुलमण्डलम्.

सीतानगरम्– अय्यगारि नरसिंहम्, प्रधानाध्यापकः, परिषत् हैस्कूल्, सीतानगरम्, श्रीकाकुलमण्डलम्.

रामतीर्थम्– डि. आनन्दराव्, आन्ध्रपण्डितः, परिषत् हैस्कूल्, रामतीर्थम्, विशाखामण्डलम्.

एतेषु केन्द्रेषु संस्कृतभाषाप्रचारिणी सभायाः परिचयादि-परीक्षाः प्रारम्भन्ते ।

# संस्कृतस्य अधिकतरव्याप्तेः उपायः

श्री के. ति. जयचन्द्रशास्त्री, कोत्तपालेम्.

संस्कृतोन्नतपाठशालाः आन्ध्रप्रदेशे किञ्चिन्न्यूनाधिकतया पञ्चाशदुत्तरशतं भवेयुरिति तर्क्यते। किन्तु तासु पाठशालासु विद्यार्थिनां संख्या दिने दिने क्षीयमाणा वर्तते। काश्चन संस्कृतोन्नतपाठशालाः विद्यार्थिनां अभावेन साधारणपाठशालाः (General Schools) संवृत्ताः। विद्याव्याप्तये बहुलतया साधारणपाठशालाः विद्यन्ते। तासां अनुबन्धतया निम्नजातीयानां, दलितजातीयानाञ्च विद्यार्थिनां कृते सर्वकारेण उचितभोजनवसतिशालाच्च (Free meal Hostals) प्रचाल्यन्ते। यद्यपि संस्कृतोन्नतपाठशालानामपि अनुबन्धतया उचितभोजनवसतिशालाः विद्यन्ते, अथाऽपि भाषाभ्याससौलभ्यमपेक्ष्य, अधिकसंख्याकाः विद्यार्थिनः साधारणपाठशालाः प्रविशन्ति, न तु संस्कृतोन्नतपाठशालाम्।

अस्मात् कारणात् संस्कृतपाठशालासु पठतां विद्यार्थिनां विना जातिमतभेदं सर्वेषां यदि प्रभुत्वेन (प्रजापालकैः) उचितभोजनसाहाय्यं कल्प्यते, तर्हि संस्कृतोन्नतपाठशालासु विद्यार्थिनां संख्या इतोऽपि अधिकतरा अवश्य भवेत्। संस्कृतस्य व्याप्तिरपि बहुळतरा स्यात्।

स्वमतनाशात् वरीयात् गृहनाशः इति निश्चित्य स दुर्मार्गः कदाचित् अर्धरात्रे स्वगृहेऽगारान्निक्षिप्य, अग्निपरीते गृहे, "हा! हा! गृहं मे दह्यते, आगच्छन्तु भो! भवन्तः! पान्तु इत्युच्चैराक्रोशत्। अग्निज्वालाः चतसृष्वपि दिक्षु प्रज्वलिताः यदाऽभवन् तदैव तेन तथाऽऽक्रन्दितम्। निद्रोत्थिता जनाः इतस्तत स्समायाताः किंकर्तव्यमूढा अर्धदग्धं गृहं कथमपि रक्षितुं नाऽशक्नुवन्।

तदा मातुलः कुहनादुःख मभिनयन्, गृहं दग्धमिति न तावद्दुःखं जनयति मम, किन्तु मम भागिनेयस्य ग्रन्थराजः दग्ध इति महान् खेदो जायते इति विलप्तु मुपचक्रमे।

रामेश्वरयात्राप्रतिनिवृत्तः पद्मपादः मातुलोक्तं गृहदाहवृत्तान्तं तन्नान्तरीयकं सूत्रभाष्यटीकाग्रन्थदाहं च श्रुत्वा "आर्य! अलं खेदेन, दैवकृतमिदं, न भवतो दोषोऽत्र लेशतोऽपि।" इत्याश्वास्य पुनर्लेखनश्रम मनिवार्यं मत्वा टीकाग्रन्थपुनर्लेखन मारेभे।

मातुलः "बत! मत्कृतः प्रयत्न स्सर्वोऽपि व्यर्थोऽभवत्। अयं खलु पुनर्ग्रन्थलेखने प्रवृत्तः। कथं तु कर्तव्योऽन्तरायोऽस्य" इत्यालोचनानिमग्न आसीत्। अन्ते स दुर्मार्गः बुद्धिमान्द्यापादकं चूर्णं आहारे मिश्रयित्वा पद्मपादं भोजयामास। तेन तस्य स्मरण शक्तिर्लुप्ता; सूत्राणि, भाष्यं, टीका च स्मृतिपथं नाऽयान्ति क्लेशेनाऽपि न स्फुरन्ति, अतः पद्मपादस्य लेखिनी न पुरोगता।

शृङ्गेरीमठे स्थिताः केचिच्छिष्याः केरलात् शंकराचार्यस्य पुनरागमनाभावात् किंकर्तव्यमूढा अत्रान्तरे रामेश्वरं गत्वाऽऽगच्छामेति मत्वा प्रस्थिताः मार्गमध्ये तेषां पद्मपादेन समावेशो जातः। पद्मपादं जडं विज्ञाय तेऽतीव दुःखिताः रामेश्वरयात्रां विरम्य तं केरले नीत्वा गुरोः पुरस्तात् स्थापयामासुः।

शंकर निजप्रभावेण शिष्यस्य, बुद्धिजाड्य मपनुद्य "पद्मपाद! एवं भवेदिति मया चिन्तितमेव। यदि कश्चित्सत्कार्यं

किञ्चित् कर्तुमिच्छति तर्हि बहवो बहुधा तद्विघटयितुं प्रयतन्ते; प्रकृतिसिद्धमिदं; नैव शोचनीय मत्र" इत्याश्वासयामास ।

पद्मपादः– गुरूत्तम ! आशीर्दीयताम्, यथा विघ्नोपशान्ति र्भूयात् । भवदीयसूत्रभाष्यस्य पुनः टीका विरच्यते मया ।

शंकरः– वत्स ! यदा त्वं शृङ्गेरीमठे टीका मपठः, तदा श्रुता सा मत्स्मृतिपथे स्थिताऽस्ति, ब्रवीमि लिख्यताम् ।

पद्मपादः आश्चर्यनिमग्नः पत्राणि लेखिनीं च गृहीत्वा आचार्येणोक्तं आमूलाग्रं ग्रन्थं लिलेख ।

इम मद्भुतं केरलाधीशः चन्द्रशेखरः श्रुत्वा सपरिवारः आचार्यसन्निधि मुपेत्य "महात्मन् ! मय्यपि दया विधीयता"मिति प्रार्थयामास ।

शंकरः– राजन् ! किमासीत् ?

राजा– पूर्वं मया विरचितं नाटकत्रयं कीटदष्टं नष्टम् । भवन्तस्तु एकसंधाग्राहिणः अतो भवद्भिः स्मृत्वा चेदुच्येत तर्हि लिख्येत मया ।

आचार्यः शैशवे श्रुतं तन्नाटकत्रयं यथावस्थितं श्रावयमास, कटाक्षयामास च राजानं तद्ग्रन्थपुनरुज्जीवनेन ।

## २२. विजययात्रा

एकदा शंकरः सुरेश्वरादिशिष्यगणेन सह एव मालोचयामास– "भगवतो वेदव्यासस्य सूत्राणां भाष्यं रचितम् । उपनिषदां भगवद्गीतायाश्च भाष्याणि रचितानि । एतेषां भाष्याणां भवद्भिः टीकाश्च विरचिताः । इतःपर मस्माभिः कर्तव्यं किमस्ती"ति । एवं विचारे प्रवर्तमाने, अत्रान्तरे तत्र सुधन्वमहीपाल स्समागतः आचार्यं प्रणनाम ।

"महात्मन् ! अहं भट्टपादस्य शिष्योऽस्मि । ते नास्तिकमतं खण्डयित्वा वेदमतोद्धारमकुर्वन् । वेदविहितकर्मभिः स्वर्गादिसौख्यं यद्यपि लभ्यते परन्तु मोक्षो न । तदर्थं अद्वैतमतमेव शरण्य मिति भवद्भिर्दर्शितम् । तथाऽपि भवदीयमतस्य प्रचार आवश्यकः । भारतवर्षे आर्यमता दुद्भूता मतविशेषा बहवस्सन्ति । शाक्तं, पाषण्डं, वैष्णवं, शैवं, सौरं, गाणापत्यं, कापालिकं, चार्वाकमित्येवमादीनि बहूनि मतानि सन्ति । एतन्मतानुयायिभिः सेव्यमानाः देवता मुक्तिप्रदा न भवन्ति; सर्वातिशायि परं ब्रह्मैव मुमुक्षुभि र्ध्येय मिति प्रतिपादयद्भवदद्वैतमतं यदि व्याप्ति अपेक्षते तर्हि भवद्भिः वादे जितो मण्डनमिश्र इव पूर्वोक्तमतवादिनः जित्वा वशे कर्तव्याः"– इति सुधन्वनृपालो व्यजिज्ञपत् ।

तच्छ्रुत्वाऽचार्यः "राजन् ! सुष्ठु उक्तं भवता; आसेतुहिमाचलं पर्यटनं कृत्वा विविधमतवादिभ्योऽद्वैतमतप्राशस्त्यं बोधयिष्यामि" इत्याह ।

अचिरेणैव कालेन आचार्यः शिष्येषु अनुसरत्सु विजययात्रायै प्रस्थितः । राजा सुधन्वाऽपि तदद्वैतमतबृन्द मनुससार ।

## २३. शाक्तेयादिमतस्थाः

प्रप्रथमं शंकराचार्यस्य शाक्तेयैस्सह वादो जातः । शक्ति परदेवतां वदन्तः शाक्तेयाः । केचन एतेषां शक्तिं भवानीं भावयन्ति सेवन्ते च; केचित्तु लक्ष्मीं भजन्ति चे देके सरस्वतीम् । त्रिविधा अप्येते सम्भूय शङ्करं जेतु मैच्छन; परन्तु तेषा मैकमत्यं नासीत् । भवान्येव परदेवतेति स्थापनीयमिति भवानीभक्ताः; लक्ष्मी पराशक्ति रिति लक्ष्मीदासा ; नहि, नहि; सरस्वती खलु जगन्मातेति सारस्वता । एव तेषां परस्परं वैमनस्यात् वैमत्याच्च एकीभावासंभवात् अन्ते ते पृथक् पृथक् शकरस्य अग्रे स्वस्वमता-

न्युपास्थन् । शंकरः सर्वं श्रुत्वा "आर्याः! भवानी लक्ष्मी र्वा अथ वाणी वा परा देवता न भवति । फलापेक्षया एतदाराधनं तु कर्तुं युज्यते । परन्तु मोक्षापेक्षया प्रवर्तमानानां तु अद्वैतज्ञानेन परं ब्रह्मैव ध्येय"मिति प्रबोध्य ततः प्रयातः ।

एवं शंकरस्य शैवा वैष्णवाश्च प्रत्यभिगताः । शिवः परम इति शैवाः विष्णुरेव सर्वेश्वर इति वैष्णवाश्च वादमारेभिरे । शैवाः त्रिशूलादिचिह्नैः वैष्णवाः चक्रादिचिह्नैश्च शरीर अङ्कयन्ति स्म । शङ्करः "भक्तवर्याः । शिवविष्णुवादिशब्दाः परमात्मनः सगुणरूपं वदन्ति । भेदबुद्धिं विहाय परमात्मा ध्येयः । किमिति नानाचिह्नैः शरीरं दहथ?" इत्याह । ते "वेदेषु शरीरतापः कर्तव्य इति उक्त मस्ति किल" इत्याहुः । शङ्करः– "तादृश वेदवाक्यानां अपार्थं कल्पयित्वा अनावश्यकतया शरीरं दाहयथ! कृच्छ्र चान्द्रायणादि व्रतविशेषैः शरीरं तापनीय मिति तदर्थः; दाहः कर्तव्य इति नार्थः" इति प्रबोध्य सशिष्य स्ततः प्रयातः ।

आचार्यः विविधप्रदेशान् गतः । चतुर्मुखमतस्थाः, वह्निमतस्थाः, सौरमतस्थाः, गाणापत्यमतस्थाश्च अभिगताः । एतेषां सर्वेषा मपि वादान् श्रुत्वा "न ब्रह्मा नाग्निः न सूर्यो न गणपतिः परमात्मा भवति । नैते मुक्तिप्रदाः । मुमुक्षुभिः परमात्मैवोपासितव्यः" इति प्रबोध्य ततः प्रस्थितः ।

## २४. सर्वं खल्विदं ब्रह्म

अथ शङ्करः काञ्चीपुरं गत्वा तत्र शिवकाञ्चीं विरममीत । कतिपयदिवसैः तत्रैव वसन् एवं बोधयामास । "जगत्कर्ता स एव परमात्मा विश्वमभिव्याप्य संप्रविष्टोऽस्ति । देवास्त्रयस्त्रयस्त्रिशद्वा, त्रिशतमुत त्रिसहस्रं, आहोस्वित् त्रिशत्कोटिपरिगणिताः इत्यादीनां प्रश्नानां समेषा मपि एक मेव समाधानं भवितुं अर्हति यत् सर्वत्र विद्यमानो देवः एक एवेति । तदेव ब्रह्मेत्युच्यते ।"

## List of Subscribers of Gairvani

| Subscriber | Amount |
| --- | --- |
| Sri Koganti Seetharamacharyulu,<br>Old Pattabhipuram,<br>Near Pattabhipuram High School, Guntur. | 4-00 |
| Sri Ch. Subramanyam, M. A.<br>Vijayawada — 4. | 4-00 |
| Sri K. A. Krishnamacharyulu, M. A.<br>Guntur — 1. | 25-00 |
| Sri V. Sampathkumaracharyulu, M. A.<br>Guntur — 2. | 4-00 |
| Sri L. Narayana Rao, M. A.<br>Guntur. | 4-00 |
| Sri R. V. A. M. Sarma,<br>Bhilai — 1. | 4-00 |
| Sri Nanduri Venkateswara Rao, B.SC. B. ED.,<br>Guntur — 4 | 4-00 |
| Sri Salaka Raghunadha Sarma, M. A.<br>Ananthapuram. | 4-00 |
| Sri K. V. K Rao,<br>Guntur — 4. | 4-00 |
| Sri P. S. Ramachandra Murthy, M. A.<br>Guntur — 4. | 4-00 |
| Sri Ch. Sambasiva Rao, M. A.<br>Srikakulam. | 4-00 |
| Sri Potalapalli Seetharama Rao,<br>Vijayawada — 4. | 116-00 |

*R. N. 1845/60.* *Postal C. T. R. 11.*
भान्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ४-००

## प्रहेलिका

मातृशब्देन सम्बन्धो जकारस्य तु सम्भवेत् ।
तदा तत्पदावाच्यत्वं सुतानाथस्य उच्यते ॥

(जामाता)

– ति. गो. अनन्तसुब्रह्मण्यम्, तिरुपति.

Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate
& Secretary S. B. P Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan. (in-charge)
at Vijaya Press, Chittoor. (A. P.) C. 1500.